न चापि भिन्नशयने नाशुचौ नाशुचिस्स्वयम् ।
नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः ॥
नाकाशे सर्वतश्शून्ये न च चैत्यद्रुमे तथा ।

प्रचेता अपि—

न सन्ध्यायां शयीत न देवसमीपे न वेदसमाप्तौ नाशुचिर्न नग्नो न विशीर्णखट्वायां नान्यवर्णोपशायितयां नाश्मपीठोपहितायां न भूतयक्षग्रहायतनेषु न श्मशानवल्मीकमहावृक्षच्छायासु च,

इति । विष्णुरपि—

नार्द्रपादवासास्स्वपेन्न पलाशशयने [1] न पञ्चदारुकृते न गजभग्नकृते न विद्युद्दग्धे [2] नाग्निप्लुष्टे न घटासिक्तद्रुमजे न श्मशानशून्यालयदेवतायतनेषु न च पलमध्ये न नारीमध्ये न धान्यगोगुरुहुताशनसुराणामुपरि नोच्छिष्टो न दिवा.

इति । विष्णुपुराणेऽपि—

नाविशालां न वा भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ॥

---

[1] नोर्द्रपादस्सुप्यन्नोत्तरापरशिरः न नग्नो नार्द्रवंशे नाकाशे न पालाशे शकने—इति मुद्रितविष्णुस्मृतौ पाठः

[2] दग्ध कृते न भग्ने नाग्निप्लुष्टे—इति तत्रैव.

इति । दक्षोऽपि—

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

अत्र कूर्मपुराणं—

इत्येतदखिलं प्रोक्तमहन्यहनि वै द्विजाः ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान्घोरान्काकयोनौ च जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥

इति । इति स्मृतिचन्द्रिकायां शयनविधिः.

आह्निकं व्यदधाद्देवः केशवार्य सुतस्सुधीः ।
सवैर्वाचनिकैरर्थैरच्युतः प्रीयतामिति ॥

इति श्री सकल विद्याविशारद श्री केशवादित्य
भट्टोपाध्यायासुत याज्ञिक देवणभट्टोपाध्याय
विरचितायां स्मृतिचन्द्रिकायां
आह्निककाण्डः समाप्तः.

